सस्यलोपप्रतिक्रिया, वृकव्याघ्रादिघातेन स्थलपथशल्यशोधनम्, शैलाटवीप्रदेशानां विविधकर्मक्षमाणामालोचनम्, आटविकवर्गविश्रम्भणम्, उत्साहशक्तिसंधुक्षणेन प्रत्यनीकवित्रासनमिति बहुतमा गुणाः । द्यूतेऽपि द्रव्यराशेस्तृणवत्त्यागादनुपमानमाशयौदार्यम्, जयपराजयानवस्थानाद्धर्षविषादयोरविधेयत्वम्, पौरुषैकनिमित्तस्यामर्षस्य वृद्धिः, अक्षहस्तभूम्यादिगोचराणामत्यन्तदुरुपलक्ष्याणां कूटकर्मणामुपलक्षणादनन्तबुद्धिनैपुण्यम्, एकविषयोपसंहाराच्चित्तस्यातिचित्रमैकाग्र्यम्, अध्यवसायसहचरेषु साहसेष्वतिरतिः, अतिकर्कशपुरुषप्रतिसंसर्गादनन्यधर्षणीयता, मानावधारणम्, अकृपणं च शरीरयापनमिति । उत्तमाङ्गनोपभोगेऽप्यर्थधर्मयोः सफलीकरणम्, पुष्कलः पुरुषाभिमानः भावज्ञानकौशलम्, अलोभक्लिष्टमाचेष्टितम्, अखिलासु कलासु वैचक्षण्यम्, अलब्धोपलब्धिलब्धानुरक्षणरक्षितोपभोगभुक्तानुसंधानरुष्टानुनयादिष्वजस्रमभ्युपायरचनया

---

कासरो हंसकाशीतनयकालिकौ' इत्यग्रतः 'आरण्यजोऽस्मिन्गवलः' इत्यभिधानचिन्तामणिवचनात् । गवयो गोसदृशः पशुः । 'गवयः स्याद्वनगवो गोमहृषोऽश्ववारणः' इत्यभिधानचिन्तामणिः । वृक ईहामृगः । 'कोक ईहामृगो वृकः' इत्यमरः । भाषया 'विग' इति प्रसिद्धः । शैलाटवी पर्वतवनम् । अटव्यां चरन्ति ते आटविकाः । विश्रम्भणं विश्वासोत्पादनम् । द्यूतेपीति । आशयौदार्यं चित्तौदार्यम् । कूटकर्मणां कपटकर्मणाम् । एकविषयोपसंहारात्तदेकवृत्तित्वात् । चित्तस्य मनसः ऐकाग्र्यमेकाग्रस्य भावस्तथा । अध्यवसाय उद्योगः । साहसमद्भुतकर्म । अतिरतिः प्रीतिः । धर्षणीयताभिभवनीयत्वम् । उत्तमाङ्गनोपभोग इति । पुष्कलः श्रेयान् । 'श्रेयाञ्श्रेष्ठः पुष्कलः स्यात्' इत्यमरः । भावश्चित्ताभिप्रायः । ज्ञानं ग्रन्थादिविषयम् । विचक्षणस्य भावो वैचक्षण्यम् । अलब्धोपलब्धिरप्राप्तप्राप्तिः । लब्धानुरक्षणं प्राप्तस्य पालनम् । भुक्तानुसंधानं भुक्तस्मृतिः । रुष्टस्यानुनयः क्रुद्धस्य समाधानम् । बुद्धि-

बुद्धिवाचोः पाटवम्, उत्कृष्टशरीरसंस्कारात्सुभगवेषतया लोकसंभावनीयता, परं सुहृत्प्रियत्वम्, गरीयसी परिजनव्यपेक्षा, स्मितपूर्वाभिभाषित्वम्, उद्रिक्तसत्त्वता, दाक्षिण्यानुवर्तनम्। अपत्योत्पादनेनोभयलोकश्रेयस्करत्वमिति। पानेऽपि नानाविधरागभङ्गपटीयसामासवानामासेवनात्स्पृहणीयवयोव्यवस्थापनम्, अहंकारप्रकर्षादशेषदुःखतिरस्करणम्, अङ्गजरागदीपनादङ्गनोपभोगशक्तिसंधुक्षणम्, *अपराधप्रमार्जनान्मनःशल्योन्मार्जनम्, अश्राव्यशंसिभिरनर्गलप्रलापैर्विश्वासोपबृंहणम्, मत्सराननुबन्धादानन्दैकतानता, शब्दादीनामिन्द्रियार्थानां सातत्येनानुभवः, संविभागशीलतया †सुहृद्वर्गसंवर्गणम्, अनुपमानमङ्गलावण्यम्, अनुत्तराणि विलसितानि, भयार्तिहरणाच्च सांग्रामिकत्वमिति। वाक्पारुष्यं दण्डो दारुणो दूषणानि चार्थानामेव यथावकाशमौपकारिकाणि। नहि मुनिरिव नरपतिरुपशमरतिरभिभवितुमरिकुलमलम्, अवलम्बितुं च लोकतन्त्रम्' इति। असावपि गुरूपदेशमिवात्यादरेण तस्य मतमन्ववर्तत। तच्छीलानुसारिण्यश्च

---

वाचोर्मतिवचनयोः। पाटवं पटुत्वम्। उत्कृष्टो यः शरीरसंस्कारः। पानेऽपीति। आसवानां मद्यानाम्। अङ्गजो मदनः। राग इच्छा। दीपनं वृद्धिः। अङ्गनाः स्त्रियः। संधुक्षणमुद्द्योतनम्। अनर्गला यथेष्टा ये प्रलापा अनर्थकवचनानि तैः। मत्सरस्याननुबन्धादाधारणात्। एकतानता। तत्परतेत्यर्थः। 'एकतानोऽनन्यवृत्तिः' इत्यमरः। सततस्य भावः सातत्यम्। संवर्गणं संयोजनम्। अनुपमानमसदृशम्। संग्रामे साधु सांग्रामिकम्। परुषस्य भावः पारुष्यम्। औपकारिकाण्युपकारक्षमाणि। उपशमः शान्तिः। लोकतन्त्रम्। 'तन्त्रं कुटुम्बकृत्ये स्यात्कारणे च परिच्छदे। शास्त्रे प्रधाने सिद्धान्ते तन्तुवाये

---

* प्रमार्जनान्मानशल्यो। † संवर्धनम्।

प्रकृतयो विशृङ्खलमसेवन्त व्यसनानि । सर्वश्च समानदोषतया न कस्यचिच्छिद्रान्वेषणायायतिष्ट । समानभर्तृप्रकृतयस्तन्त्राध्यक्षाः स्वानि कर्मफलान्यभक्षयन् । ततः क्रमादायद्वाराणि व्यशीर्यन्त । व्ययमुखानि विटवैधेयतया विभोरहरहर्व्यवर्धन्त । सामन्तपौरजानपदमुख्याश्च समानशीलतयोपारूढविश्रम्भेण राज्ञा *सजायाः पानगोष्ठीष्वभ्यन्तरीकृताः स्वं स्वमाचारमत्यचारिषुः । तदङ्गनासु चानेकापदेशपूर्वमपाचरन्नरेन्द्रः । तदन्तःपुरेषु चामी भिन्नवृत्तेषु मन्दत्रासा बहुसुखैरवर्तन्त । सर्वश्च कुलाङ्गनाजनः †सुलभभङ्गिभाषणरतो भग्नचारित्रयन्त्रणस्तृणायापि न गणयित्वा भर्तॄन्धातृगणमन्त्रणान्यशृणोत् । तन्मूलाश्च कलहाः सामर्षाणामुदभवन् । अहन्यन्त दुर्बला बलिभिः । अपहृतानि धनवतां धनानि तस्करादिभिः । अपहृतपरिभूतयः प्रहताश्च पातकपथाः । हतबान्धवा हृतवित्ता वधबन्धातुराश्च मुक्तकण्ठमाक्रोशन्नश्रुकण्ठ्यः प्रजाः । दण्ड-

---

गदोत्तमे । तत्त्वादिसाधनोपाये श्रुतिशाखान्तरेऽपि च' इति विश्वः । प्रकृतयः प्रजाः । विशृङ्खलं बन्धशून्यम् । छिद्रान्वेष्यणाय । दोषगवेषणायैश्वर्यः । तन्त्राध्यक्षा सेनापतयः । आयद्वाराण्यागमनोपायाः । व्ययमुखानि व्ययप्रभृतीनि । विटस्य पिङ्गस्य । वैधेयतया बालिशतया । 'मूर्खवैधेयबालिशाः' इत्यमरः । 'विधेयतया' इति पाठे विनयग्राहितया । *'विधेयो विनयग्राही' इत्यमरः । अहरहः प्रतिदिवसम् ।* सजायाः सस्त्रीकाः । पानगोष्ठी मद्यशाला । अत्यचारिषुरतिक्रमयामासुः । मन्दत्रासा निर्भया इत्यर्थः । धातॄणां गणा जारसमूहाः । 'धाता जारे विधातरि' इत्यजयः । अश्रुकण्ठ्यः । गद्गदयुक्ता इत्यर्थः । परोपजापा भेदाः । 'भद्रिद्रोणी स्यादापहृतिः' इति वैजयन्ती । धन-

---

* सजानयः । † सुलभमङ्गि, पांसुलजनभङ्गि, सुभुग्नभङ्गी ।

न्यायथाप्रणीतो भयक्रोधावजनयत्। कृशकुटुम्बेषु लोभः पदमधत्त। विमानिताश्च तेजस्विनो मानेनादह्यन्त। तेषु तेषु चाकृत्येषु प्रासरन्परोपजापाः। तदा च मृगयुवेषमृगयाहुल्यवर्णनेनाद्रिद्रोणीरनपसारमार्गाः शुष्कतृणवंशगुल्माः प्रवेश्य द्वारतोऽग्निविसर्गैः, व्याघ्रादिवधे प्रोत्साह्य तन्मुखप्रवेशनपातनैः, इष्टकूपतृष्णोत्पादनेनातिदूरहारितानां प्राणहारिभिः क्षुत्पिपासाभिवर्धनैः तृणगुल्मगूढश्वभ्रतटप्रदरपातहेतुभिर्विषममार्गप्रधावनैः विषमुखीभिः क्षुरिकाभिश्चरणकण्टकोद्धरणैः *विष्वग्विसरविच्छिन्नानुयातृतयैकाकीकृतानां यथेष्टघातनैः, मृगदेहापराद्धैर्नामेषुमोक्षणैः, सपणबन्धमधिरुह्याद्रिशृङ्गाणि दुरधिरोहाण्यनन्यलक्ष्यैः प्रभ्रंशनैः, आटविकच्छद्मना विपिनेषु विरलसैनिकानां प्रतिरोधनैः, अक्षद्यूतपक्षियुद्धयात्रोत्सवादिसंकुलेषु बलवदनुप्रवेशनैः इतरेषां हिंसोत्पादनैः, गूढोत्पादितव्यलीकेभ्योऽप्रियाणि प्रकाशं लब्ध्वा सादितेषु तद्विख्याप्याकीर्तिगुप्तिहेतुभिः पराक्रमैः परकलत्रेषु सुहृत्त्वेनाभियोज्य जारान्भर्तृनुभयं वा प्रहृत्य तत्साहसोपन्यासैः, योग्यनारीहारितानां संकेतेषु प्रागुपनिलीय

पसारमार्गा अनिर्याणमार्गाः। वंशगुल्मा वेणुगहनानि। अग्निविसर्गैरग्निदानैः प्रोत्साह्य। आनन्द्येत्यर्थः। तट उन्नतप्रदेशे। प्रदरो निम्नगो भागः। विषममार्गः कठिनमार्गः। क्षुरिकाः शस्त्रिकाः। विसरः समुदायः। 'समूहे निवहव्यूहसंदोहविसरव्रजाः' इत्यमरः। अनुयातानुगामी। मृगदेहापराद्धैरपराद्धो भ्रष्टच्युतः। इषुमोक्षणैर्बाणपातनैः। सपणबन्धं सनियमम्। अटवीमटन्ति त आटविकाः। व्यलीकं दुःखम्। जारानुपपतीन्। योग्या नारी। 'योगो विस्रब्धघाती स्यात्' इति। प्राक्प्रथमम्। लीनतां प्राप्येत्यर्थः। प्रमापणैः। निवर्तनैर्हिंसोत्पादनैः।

* विष्वक्प्रचार। भर्तृभयमपहृत्य।

धरामादायापसर्पन्नापदोऽस्या भावितया दाहज्वरेण देहमजहात्। अस्मादृशैर्मित्रैस्तु नीत्वा महिष्मतीं भर्तृद्वैमातुराय भ्रात्रे मित्रवर्मणे सापत्या देवी दर्शिताऽभूत्। तां चाऽऽर्यामनार्योऽसावन्यथाऽभ्यमन्यत। निर्भर्त्सितश्च तया सुतमियमखण्डचारित्रा राज्यार्हं चिकीर्षति इति नैर्घृण्यात्तमेनं बालमजिघांसीत्। इदं तु ज्ञात्वा देव्याहमाज्ञप्तः—'तात नालीजङ्घ, जीवतानेनार्भकेण यत्र क्वचिदवधाय जीव। जीवेयं चेदहमप्येनमनुसरिष्यामि। ज्ञापय मां क्षेमप्रवृत्तः स्ववार्ताम्' इति। अहं तु संकुले राजकुले कथंचिदेनं निर्गमय्य विन्ध्याटवीं व्यगाहिषि। *पादचारिणं चैनमाश्वासयितुं घोषे क्वचिदहानि कानिचिद्विश्रमय्य, तत्रापि राजपुरुषसंपातभीतो दूरध्वमपासरम्। अत्रास्य दारुणपिपासापीडितस्य वारि दातुकामः कूपेऽस्मिन्नपभ्रश्य पतितस्त्वयैवमनुगृहीतः त्वमेवास्यातः शरणमेधि विशरणस्य राजसूनोः' इत्यंजलिमबध्नात्। 'किमीया जात्यास्य माता' इत्यनुयुक्ते मयाऽमुनोक्तम्—'पाटलिपुत्रस्य वणिजो वैश्रवणस्य दुहितरि सागरदत्तायां कोसलेन्द्रात्कुसुमधन्वनोऽस्य माता जाता' इति। 'यद्येवमेतन्मातुर्मत्पितुश्चैको मातामहः' इति सस्नेहं तमहं सस्वजे। वृद्धेनोक्तम्—'सिन्धुदत्तपुत्राणां कतमस्ते पिता, इति। 'सुश्रुतः' इत्युक्ते सोऽत्यहृष्यत्। अहं तु 'तं नयावलिप्तमश्मकेन्द्रं †नयेनैवोन्मूल्य बालमेनं पित्र्ये पदे प्रतिष्ठापयेयम्' इति प्रतिज्ञाय 'कथमस्यैनां

---

राल्पग्रामे। 'घोष आभीरपल्ली स्यात्' इत्यमरः। दूराध्वं दूरमार्गम्। पिपासा तृषा। विशरणस्य शरणरहितस्य। अश्मकनयेन पापाणोन्मूलनेन। पित्र्ये पदे पितुः स्थाने। सपत्राकृतः पत्रेण सह विद्धः।

---

*पादचारदुःस्थिम्। †अश्मकम्।

क्षुधं *क्षपयेयम्' इत्यचिन्तयम्। तावदापतितौ च कस्यापि व्याधस्य त्रीनिषूनतीत्य द्वौ मृगौ स च व्याधः। तस्य हस्तादवशिष्टमिषुद्वयं कोदण्डं चाक्षिप्यावधिषम्। एकश्च सपत्राकृतोऽन्यश्च निष्पत्राकृतोऽपतत्। तं चैकं मृगं दत्त्वा मृगयवे, अन्यस्यापलोमत्वचः क्लोमापोह्य, निष्कुलाकृत्य †विकृत्योर्वस्थिग्रीवादीनि शूलाकृत्य दावाङ्गारेषु तप्तेनाऽऽमिषेण, तयोरात्मनश्च ‡क्षुधमत्यतार्षम्। एतस्मिन्कर्मणि मत्सौष्ठवेनातिहृष्टं किरातमस्मि पृष्टवान्, §'अपि जानासि माहिष्मतीवृत्तान्तम्' इति। असावाचष्ट —'तत्र व्याघ्रत्वचो दृतीश्च विक्रीयाद्यैवागतः किं न जानामि। प्रचण्डवर्मा नाम चण्डवर्मानुजो मित्रवर्मदुहितरं मञ्जुवादिनीं विलिप्सुरभ्येतीति तेनोत्सवोत्तरा पुरी' इति। अथ कर्णे जीर्णमब्रवम्—'धूर्तो मित्रवर्मा दुहितरि सम्यक्प्रतिपत्त्या मातरं विश्वास्य तन्मुखेन प्रत्याकृष्य बालकं जिघांसति। तत्प्रतिगत्य कुशलमस्य मद्वार्तां च देव्यै रहो निवेद्य, पुनः कुमारः शार्दूलभक्षित इति प्रकाशमाक्रोशनं कार्यम्। स दुर्मतिरन्तःप्रीतो बहिर्दुःखं दर्शयन्देवीमनुनेष्यति। पुनस्तया त्वन्मुखेन स वाच्यः—'यदपेक्षया

'वाहने तु च्छदे पत्रम्'। इति भागुरिः। 'सपत्रनिष्पत्रादतिव्यथने' इति डाच्। अन्यो द्वितीयो निष्पत्राकृतः। मृगयवे लुब्धकाय। अपलोम रोमशून्यम्। त्वचश्चर्मणः। क्लोम। 'तिलकं क्लोम मस्तिष्कम्' इत्यमरः। निष्कुलाकृत्य विकृत्य विच्छिद्य। अङ्घ्रीश्चरणान्। 'अङ्गानि' इति वा पाठः। शूलाकृत्य शूले कृत्वा। शूलेन पाचयित्वेत्यर्थः। 'शूलात्पाके' इति डाच्। दावाङ्गारेषु वनवह्निषु। तप्तेन भर्जितेन। आमिषेण मांसेन। क्षुधं क्षुधाम्। अतार्षमति-

*क्षयेयम्। †विकृत्याङ्घ्रिग्रीवादि। ‡अत्यतार्प्सम्; अतर्क्षिपम्। §अयि।

पश्चादभिद्रुत्याकीर्तनीयैः प्रमापणैः, उपप्रलोभ्य बिलप्रवेशेषु निधानखननेषु मन्त्रसाधनेषु च विघ्नव्याजसाध्यैर्व्यापादनैः, मत्तगजाधिरोहणाय प्रेर्य *प्रत्यपायनिवर्तनैः, व्यालहस्तिनं कोपयित्वा †लक्ष्यीकृतमुख्यमण्डलेष्वक्रमणैः, दायाद्यर्थे विवदमानानुपांशु हत्वा प्रतिपक्षेष्वयशःपातनैः, सामन्तपुरजनपदेष्वयथावृत्तानप्रकाशमभिप्रहृत्य तद्वैरिनामघोषणैः, योग्याङ्गनाभिरहर्निशमभिरमय्य राजयक्ष्मोत्पादनैः, वस्त्राभरणमाल्याङ्गरागादिषु रसविधानकौशलैः, ‡चिकित्सामुखेनाऽऽमयोपबर्हणैरन्यैश्चाभ्युपायैरश्मकेन्द्रप्रयुक्तास्तीक्ष्णरसदादयः प्रक्षपितप्रवीरमनन्तवर्मकटकं जर्जरमकुर्वन्। अथ वसन्तभानुर्भानुवर्माणं नाम वानवास्यं प्रोत्साह्यानन्तवर्मणा व्यग्राहयत् । तत्पराम्रृष्टराष्ट्रपर्यन्तश्चानन्तवर्मा तमभियोक्तुं बलसमुत्थानमकरोत् । सर्वसामन्तेभ्यश्चाश्मकेन्द्रः प्रागुपेत्यास्य प्रियतरोऽभूत् । अपरेऽपि सामन्ताः समगंसत । गत्वा चाभ्यर्णे नर्मदारोधसि न्यविशन् । तस्मिंश्चावसरे महासामन्तस्य कुन्तलपतेरवन्तिदेवस्याऽऽत्मनाटकीयां क्षमातलो-

---

व्यालहस्तिनं दुष्टदन्तिनम् । 'व्यालो दुष्टगजः प्रोक्तः' इति हलायुधः । अक्रमणैरक्रमग्लहैः । 'पणो वराटमाने स्यान्मूल्ये कार्षापणे ग्लहे,' इति विश्वः । उपांशु रहसि । घोषणैर्डिण्डिमैः । अहर्निशं रात्रिंदिवम् । राजयक्ष्मा रोगविशेषः । रसविधानम् । 'रसाधानं विषाधानं तीक्ष्णा मर्मणि घातकाः' इति वैजयन्ती । आमयो रोगः । उपबर्हणं वर्धनम् । अथेति । वानवास्यम् । 'वानवास्यो वनप्रभुः' इति । प्रोत्साह्य आनन्द्येत्यर्थः । अभियोक्तुं पराभवितुम् । समगंसत । गम्लृ गतौ । समुपसर्गः लुङ् । 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदम् । मिलिता इत्यर्थः । अभ्यर्णे समीपे आत्मनाटकीयां स्वीयनृत्याङ्गनाम् ।

---

*प्रत्यपायनिवर्तनैः । †अपक्रमणैः, अमर्षणैः ‡उपबृंहणैः ।

र्वशीं नाम चन्द्रपालितादिभिरतिप्रशस्तनृत्यकौशलामाहूयानन्तवर्मा नृत्यमद्राक्षीत्। अतिरक्तश्च भुक्तवानिमां *मधुमत्ताम्। अश्मकेन्द्रस्तु कुन्तलपतिमेकान्ते समभ्यधत्त—'प्रमत्त एष राजा कलत्राणि नः परामृशति। कियत्यवज्ञा सोढव्या। मम शतमस्ति हस्तिनाम्, पञ्चशतानि च ते। तदावां संभूय मुरलेशं वीरसेनमृचीकेशमेकवीरं कोङ्कणपतिं कुमारगुप्तं नासिक्यनाथं च नागपालमुपजपाव। ते चावश्यमस्याविनयमसहमाना अस्मन्मतेनैवोपावर्तेरन्। अयं च वानवास्यः प्रियं मे मित्रम्। अमुनैनं दुर्विनीतमग्रतो व्यतिपक्तं पृष्ठतः प्रहरेम। कोशवाहनं च विभज्य गृह्णीमः' इति। हृष्टेन चामुनाऽभ्युपेते, विंशतिं वरांशुकानाम्, पञ्चविंशतिं काञ्चनकुङ्कुम†कम्बलानाम्, प्राभृतीकृत्याऽऽप्तमुखेन तैः सामन्तैः संमन्त्र्य तानपि स्वमतावस्थापयत्। उत्तरेद्युस्तेषां सामन्तानां वानवास्यस्य चानन्तवर्मा नयद्वेषादामिषत्वमगमत्। वसन्तभानुश्च तत्कोशवाहनमवशीर्णमात्माधिष्ठितमेव कृत्वा 'यथाप्रयासं यथाबलं च विभज्य गृह्णीत। युष्मदनुज्ञया येनकेनचिदंशेनाहं तुष्यामि' इति शाठ्यात्सर्वानुवर्ती, तेनैवामिषेण निमित्तीकृतेनोत्पादितकलहः सर्वसामन्तानध्वंसयत्। तदीयं च सर्वस्वं स्वयमेवाग्रसत्। वानवास्यं केनचिदंशेनानुगृह्य प्रत्यावृत्य सर्वमनन्तवर्मराज्यमात्मसादकरोत्। अस्मिंश्चान्तरे मन्त्रिवृद्धो वसुरक्षितः कैश्चिन्मौलैः संभूय बालमेनं भास्करवर्माणम्, अस्यैव ज्यायसीं भगिनीं त्रयोदशवर्षां मञ्जुवादिनीम्, अनयोश्च मातरं महादेवीं वसु-

संभूय मिलित्वा। प्राभृतीकृत्योपायनीकृत्य। अस्मिन्निति। अपसर्पन्त्या त्वा। द्वैमातुरायाभिन्नमात्रे। पादचारिणं चरणगामिनम्। घोष आभी

* मधूत्तमाम्। †लपानाम्।

हर्षगर्भमब्रूत—'तच्चेन्मिथ्या सोऽयं युष्मदीयो बालकपाली श्वो मया निरोद्धव्यः' इति। मयाऽपि सस्मितं मञ्जुवादिनीराग*लीनदृष्टिलीढधैर्येण 'एवमस्तु' इति लब्धभैक्षः, नालीजङ्घमाकार्य निर्गम्य ततश्च तं चानुयान्तं शनैरपृच्छम्—'क्वासावल्पायुः प्रथितः प्रचण्डवर्मा' इति। सोऽब्रूत—'राज्यमिदं ममेत्यपास्तशङ्को राजास्थानमण्डप एव तिष्ठत्युपास्यमानः कुशीलवैः' इति 'यद्येवमुद्याने तिष्ठ' इति तं जरन्तमादिश्य तत्प्राकारैकपार्श्वे क्वचिच्छून्यमठिकायां मात्राः समवतार्य, तद्रक्षणनियुक्तराजपुत्रः, कृतकुशीलववेषलीलः प्रचण्डवर्माणमेत्यान्वरञ्जयम्। अनुरञ्जितातपे तु समये, जनसमाजज्ञानोपयोगीनि संहृत्य नृत्यगीतनानारुदितादिहस्तचङ्क्रमणमूर्ध्वपादालातपादापीडवृश्चिक-

ताम्। प्रणमय्य। नमस्कारं कारयित्वेत्यर्थः। अब्रूत। 'ब्रूञ् व्यक्तायां वाचि' इत्यस्य रूपम्। सस्मितं सहासमभिहितम्। रागलीना या दृष्टिस्तया लीढमास्वादितं यद्धैर्यं तेन लब्धभैक्षो लब्धा प्राप्ता भिक्षा येनेति 'भिक्षादिभ्योऽण्'। नालीजङ्घमेतन्नामानम्। आकार्य। अनुयान्तं पश्चादनुवर्तमानम्। आस्थानमण्डपे सभामण्डपे। कुशीलवैर्गायकैः। 'गायकास्तु कुशीलवाः' इति वैजयन्ती। उद्यान उपवने। जरन्तं जीर्णम्। 'प्राकारो वरणः सालः' इत्यमरः। अण्पो मठो मठिका। मात्रा परिच्छदादीन्। 'मात्रा परिच्छेदेऽल्पेंऽशे. प्रवृत्तौ कर्णभूषणे। अक्षरावयवे माने' इति वैजयन्ती। तद्रक्षणे मात्रारक्षणे। जनसमाजस्य लोकसमूहस्य। ज्ञानोपयोगीनि। नृत्यं नर्तनम्। गीतं गानम्। नानारुदितादि रोदनशब्दानुकरणानि। हस्तयोश्चङ्क्रमणमितस्ततः प्रसारणम्। भ्रमणं वा। ऊर्ध्वपादमलातपादम्। 'कराभ्यामवनीं स्पृष्ट्वा मूर्धानं भ्रामयेन्मुहुः। उत्तानीकृत्य चरणावूर्ध्वपादं तदुच्यते॥' इति नृत्याध्याये भरतः। 'उद्धृत्यैकं तु चरणमन्यं कृत्वैव कुञ्चितम्। नृत्यत्यनुमतं तिर्यक्तदालातकमेव च॥' इत्यपि।

*दीन।

मकरलङ्घनादीनि मत्स्योद्वर्तनादीनि च करणानि, पुनरादायाऽऽदायाऽऽसन्नवर्तिनां छुरिकाः ताभि*रुपाहितवर्ष्मा चित्रदुष्कराणि करणानि श्येनपातोत्क्रोशपातादीनि दर्शयन्, विंशतिचापान्तरालावस्थितस्य प्रचण्डवर्मणश्छुरिकयैकया प्रत्युरसं प्रहृत्य, 'जीव्याद्वर्षसहस्रं वसन्तभानुः' इत्यभिगर्जन्, मद्गात्रमुत्कर्तुमुद्यतासेः कस्यापि चारभटस्य पीवरांसबाहुशिखरमाक्रम्य, तावतैव तं विचेतीकुर्वन्, आकुलं च लोकमुच्चलूकुर्वन्, द्विपुरुषोच्छ्रितं प्राकारमत्यलङ्घयम्। अवप्लुत्य चोपवने 'मदनुपातिनामेष पन्था दृश्यते' इति ब्रुवाण एव नालीजङ्घसमीकृतसैकतास्पृष्टपादन्यासया तमालवीथ्या चानुप्राकारं प्राचा प्रतिप्रधावितः, पुनरवाचोच्चितेष्टकचितत्वादलक्ष्यपातेन प्रद्रुत्य, लङ्घितप्राकारवप्रखातवलयः, तस्यां शून्यमठिकायां तूर्णमेव प्रविश्य, प्रतिमुक्तपूर्ववेषः

---

वृश्चिकलङ्घनं मकरलङ्घनं चेति द्वन्द्वान्ते श्रूयमाणं पदं प्रत्येकं संबध्यते। मत्स्योद्वर्तनानि मीनवद्विलसितानि। आदायादाय। विश्वासद्योतनार्थं द्विरुक्तिः। छुरिकाः शस्त्राणि। ताभिः छुरिकाभिः। उपाहितवर्ष्मा संयुक्तदेहः। 'वर्ष्म विग्रहः' इत्यमरः। श्येनपातः। परिक्रम्यान्तरिक्षेण संप्राप्योच्चैदूर्श्यताम्। आकस्मिकाभिपातेन श्येनपात इतीरितः' इति। उत्क्रोशपातश्च कुररपातः। 'उत्क्रोश कुररौ समौ' इत्यमरः। चापः। प्रसारितबाहुद्वयप्रमाणं चाप इत्युच्यते। भाषया 'वांव' इति प्रसिद्धिः। 'विंशतिचाप' इति पाठो मुख्यः। मद्गात्रं मच्छरीरम्। उत्कर्तुं त्रोटितुम्। उद्यतासेरूर्ध्वीकृतखड्गस्य। चारभटस्य चारश्चासौ भटश्चेति व्युत्पत्तिः। 'भटश्चारभटो मतः' इति हलायुधः। पीवरांसं मांसलस्कन्धम्। तं चारभटम्। द्विपुरुषोच्छ्रितं पुरुषद्वयप्रमाणोच्चम्। अवप्लुत्योड्डीय। सैकतं सिकतामयम्। अस्पृष्टपादन्यासया न स्पृष्टः पादन्यासश्चरणपातो यस्या-

---

*उपहित। †अवकर्तुम्।

त्वन्मतमत्यक्रमिषं सोऽपि बालः पापेन मे परलोकमगात्। अद्य तु त्वदादेशकारिण्येवाहम् इति । स तथोक्तः प्रीतिं *प्रतिपद्याभिपत्स्यति। पुनरनेन वत्सनाभनाम्ना महाविषेण †संनीय ‡तोये तत्र मालां मज्जयित्वा तया स वक्षसि मुखे च हन्तव्यः । 'स एवायमसिप्रहारः पापीयसस्तव भवतु यद्यस्मि पतिव्रता' । पुनरनेनागदेन संगमितेऽम्भसि तां मालां मज्जयित्वा स्वदुहित्रे देया । मृते तु तस्मिंस्तस्यां च निर्विकारायां सत्याम्, सतीत्येवैनां प्रकृतयोऽनुवर्तिष्यन्ते । पुनः प्रचण्डवर्मणे संदेश्यम्—'अनायकमिदं राज्यम्। अनेनैव सह बालिकेयं स्वीकर्तव्या' इति। तावदावां कापालिकवेषच्छन्नौ देव्यैव दीयमानभिक्षौ पुरो बहिरुपश्मशानं वत्स्यावः । पुनरार्यप्रायान्पौरवृद्धानामांश्च मन्त्रिवृद्धानेकान्ते ब्रवीतु देवी—'स्वप्नेऽद्य मे देव्या विन्ध्यवासिन्या कृतः प्रसादः। अद्य चतुर्थेऽहनि प्रचण्डवर्मा मरिष्यति । पञ्चमेऽहनि रेवातटवर्तिनि मद्भवने परीक्ष्य वैजन्यम्, जनेषु निर्गतेषु कपाटमुद्घाट्य त्वत्सुतेन सह

क्रान्तवान् । व्याघ्रत्वचो व्याघ्रचर्माणि । दूतीश्चेति । 'दूतिभिक्षुतनीयत्नभर्त्री चापि स्त्रियैः समाः' इति । आक्रोशनमाचारणा । वत्सनाभः 'दारदो वत्सनाभः स्यात्' इत्यमरः । संनीय संमिश्र्य । तोय उदके । तया मालया । अगदेनौषधेन । 'संजीवनं स्यादगदम्' इति वैजयन्ती। तस्यां स्वदुहितरि । निर्विकारायां विकारशून्यायाम् । प्रकृतयः प्रजाः । संदेश्यम् । कथनीयमित्यर्थः । कापालकी व्रतधारी । 'कापाली स्यान्महाव्रती' इति कोशः । पुरो बहिः । नगराद्बहिरित्यर्थः । आर्यप्रायान् । श्रेष्ठीनित्यर्थः । स्वप्ने स्वप्नावस्थायाम् । मे इति मह्यम् । मरिष्यतीति 'मृङ् प्राणत्यागे' इत्यस्य रूपम् । वैजन्यं विजनस्य

*प्रत्यपत्स्यते । †संमील्य । ‡तोयम् ।

कोऽपि द्विजकुमारो निर्यास्यति । स राज्यमिदमनुपाल्य बालं ते प्रतिष्ठापयिष्यति । स खलु बालो मया व्याघ्रीरूपया तिरस्कृत्य स्थापितः। सा चेयं वत्सा मञ्जुवादिनी तस्य द्विजातिदारकस्य दारत्वेनैव कल्पिता' इति, तदेतदतिरहस्यं युष्मास्वेव गुप्तं तिष्ठतु यावदेतदुपपत्स्यते' इति। स सांप्रतमित्यतिप्रीतः प्रयातोऽर्थश्चायं यथाचिन्तितमनुष्ठितोऽभूत् । प्रतिदिशं च लोकवादः प्रासर्पत्—'अहो माहात्म्यं पतिव्रतानाम् । असिप्रहार एव हि स मालाप्रहारस्तस्मै जातः । न शक्यमुपधियुक्तमेतत्कर्मेति वक्तुम्, यतस्तदेव दत्तं दाम दुहित्रे स्तनमण्डनमेव तस्यै जातम्, न मृत्युः । योऽस्याः पतिव्रतायाः शासनमतिवर्तते स भस्मैव भवेत्' इति ।

अथ महाव्रतिवेषेण मां च पुत्रं च भिक्षायै प्रविष्टौ दृष्ट्वा प्रस्नुतस्तनी प्रत्युत्थाय हर्षाकुलमब्रवीत्—'भगवन्, अयमञ्जलिः । अनाथोऽयं जनोऽनुगृह्यताम् । अस्ति ममैकः स्वप्नः स किं सत्यो न वा' इति । मयोक्तम्—'फलमस्याद्यैव द्रक्ष्यसि' इति । 'यद्येवं बहुभागधेयमस्या वो दास्याः । स खल्वस्याः सानाथ्यशंसी स्वप्नः; इति मद्दर्शनारागबद्धसाध्वसां मञ्जुवादिनीं प्रणमय्य; भूयोऽपि सा

---

भावस्तया। तिरस्कृत्य भीषयित्वा। द्विजातिदारकस्य ब्राह्मणपुत्रस्य। दारत्वेन स्त्रीत्वेन । युष्मास्वेव । भवत्स्वेवेत्यर्थः । सांप्रतम् । युक्तमित्यर्थः । प्रासर्पत्प्रसृतोऽभूत् ॥ असिप्रहार एव खड्गप्रहार एव । उपधिः कपटम् । दाम माला । दुहित्रे कन्यायै स्तनमण्डनं कुचभूषणम् । अतिवर्ततेऽतिक्रामति । प्रस्नुतस्तनी पयःप्रसरत्स्तनी । द्रक्ष्यसि । पश्यसीत्यर्थः । सानाथ्यशंसी सनाथस्य भावः सानाथ्यं तच्छंसतेऽसौ तथा मद्दर्शनरागेण बद्धं साध्वसं ययेति सा ताम् । मञ्जुवादिनीम् । 'मञ्जु मञ्जुलम्' इत्यमरः । वदति सा वादिनी

सह कुमारेण मत्कर्मतुमुलराजद्वारदुःखलब्धवर्त्मा श्मशानोद्देशमभ्यगाम्। प्रागेव तस्मिन्दुर्गागृहे प्रतिमाधिष्ठान एव मया कृतं भग्नपार्श्वस्थैर्यस्थूलप्रस्तरस्थगितबाह्यद्वारं बिलम्।

अथ गलति मध्यरात्रे वर्षवरोपनीतमहार्हरत्नभूषणपट्टनिवसनौ तद्बिलमावां प्रविश्य तूष्णीमतिष्ठाव। देवी तु पूर्वेद्युरेव यथार्हमग्निसंस्कारं बालकाय दत्त्वा प्रचण्डवर्मणे च तामवस्थामश्मकेन्द्रोपधिकृतामेव संदिश्य, उत्तरेद्युः प्रत्युषस्येव पूर्वसंकेतितपौरामात्यसामन्तवृद्धैः सहाभ्येत्य भगवतीमर्चयित्वा सर्वजनप्रत्यक्षं परीक्षितकुक्षिवैजन्यं तद्भवनं विधाय दत्तदृष्टिः सह जनेन स्थित्वा, पटीयांसं पटहशब्दमकारयत्। अश्रुतिरन्ध्रप्रविष्टेन तेन नादेनाहं दत्तसंज्ञः शिरसैवोत्क्षिप्य सप्रतिमं लोहपादपीठमंसलपुरुषप्रयत्नदुश्चलमुभयकरविधृतमेकपार्श्वमेकतो निवेश्य निरगमम्। निरगमयं च कुमारम्। अथ यथापूर्वमर्चयित्वा दुर्गामुद्घाटितकपाटः प्रत्यक्षीभूय प्रत्ययहृष्टदृष्टि स्पष्टरोमाञ्चमुद्यताञ्जलिरूढविस्मयं च प्रणिपतन्तीः प्रकृतीरभ्यधाम्—'इत्थं देवी विन्ध्यवासिनी मन्मुखेन युष्मानाज्ञापयति—'स एष राजसूनुरापन्नो मया संकृ-

---

मिति। तमालवीथ्या तमालपङ्क्त्या। अथानोच्छिन्नेष्टका इत्यनेन च बद्धेष्टका। तुमुलो व्याकुलरवः। 'तुमुलो व्याकुलरवः' इति महीपः। प्रस्तरः पाषाणः। 'पाषाणप्रस्तरग्रावोपलाश्मानः शिला दृषत्' इत्यमरः। अथेति। गलति गच्छतीत्यर्थः। वर्षवरः। 'षण्ढो वर्षवरः' इत्यमरः। महार्हाण्यमौल्यानि। पट्टानि वसनानि पट्टवस्त्राणि। पूर्वेद्युः पूर्वदिवसे। प्रत्युषसि प्रातःकाले। वैजन्यं विजनस्य भावस्तथा। पटीयांसं श्रेष्ठम्। पटहशब्दं दुन्दुभिध्वनिम्। अंसलपुरुषा मांसलपुरुषाः। 'बलवान्मांसलोंऽसलः' इत्यमरः। 'वत्सांसाभ्यां कामबले' इति लच्। प्रत्ययः साक्षात्कारः। हृष्टा दृष्टिर्यासां ता इति।

पया शार्दूलरूपेण तिरस्कृत्याद्य वो दत्तः। तमेनमद्यप्रभृति मत्पुत्रतया मन्दमातृपत्त इति परिगृह्णन्तु भवन्तः। अपि च दुर्घटकूटकोटिघटनापाटवप्रकटशाठ्यनिष्ठुराश्मकवटघट्टनात्मानं मां मन्यध्वमस्य रक्षितारम्। रक्षानिर्वेशश्चास्य स्वसेयं सुभ्रूरभ्यनुज्ञाता मह्यमार्यया' इति। श्रुत्वैतत् 'अहो भाग्यवान्भोजवंशः, यस्य त्वमार्यादत्तो नाथः' इत्यप्रीयन्त प्रकृतयः। सा तु वाचामगोचरां हर्षावस्थामस्पृशन्मे श्वश्रूः। तदहरेव च यथावदग्राहयन्मञ्जुवादिनीपाणिपल्लवम्। प्रपन्नायां च यामिन्यां सम्यगेव विलं प्रत्यपूरयम्। अलब्धरन्ध्रश्च लोको नष्टमुष्टिचिन्तादिकथनैरभ्युपायान्तरप्रयुक्तैर्दिव्यांशतामेव मम समर्थयमानः, मदाज्ञां नात्यवर्तत। राजपुत्रस्यार्यापुत्र इति प्रभावहेतुः प्रसिद्धिरासीत्। तं च गुणवत्यहनि भद्राकृतमुपनाय्य पुरोहितेन पाठयन्नीति राजकार्याण्यन्वतिष्ठम्। अचिन्तयं च—'राज्यं नाम शक्तित्रयायत्तम्, शक्तयश्च मन्त्रप्रभावोत्साहाः परस्परानुगृहीताः कृत्येषु क्रमन्ते। मन्त्रेण हि विनिश्चयोऽर्थानाम्, प्रभावेण प्रारम्भः, उत्साहेन निर्वहणम्। अतः पञ्चाङ्गमन्त्रमूलः, द्विरूपप्रभावस्कन्धः; चतुर्गुणोत्साहविटपः, द्विसप्ततिप्रकृति-

---

प्रकृतीः प्रजाः। आपन्न आपत्प्राप्तः। तिरस्कृत्यान्तर्धाय। दुर्घटा घटनाशक्या। कूटं कपटम्। कोटिरग्रम्। संख्या वा। घटना योजना। पाटवं कुशलता। स्वसा भगिनी। अप्रीयन्त प्रीतिमापुः। अगोचरामविषयाम्। दिव्यांशतां दिवि भवा दिव्यास्तेषामंशस्तस्य भावस्तत्ता ताम्। आर्यापुत्र इति भवानीपुत्र इति। गुणवति। निर्दोष इत्यर्थः। अहनि दिवसे। भद्राकृतं कल्याणाकृतम्। उपनाय्योपनयनं कारयित्वेत्यर्थः। राज्यमिति। शक्तित्रयायत्तं शक्तित्रयाधीनम्। परस्परानुगृहीता अन्योन्यकृतसहायाः। कृत्येषु कार्येषु। पञ्चाङ्गमन्त्रमूलः। 'सहायाः साधनोपाया विभागो

पत्रः षड्गुणकिसलयः, शक्तिसिद्धिपुष्पफलश्च, नयवनस्पतिर्नेतुरुपकरोति। स चायमनेकाधिकरणत्वादसहायेन दुरुपजीव्यः। यस्त्वयमार्यकेतुर्नाम मित्रवर्ममन्त्री स कोसलाभिजनत्वात्कुमारमातृपक्षो मन्त्रिगुणैश्च युक्तः, तन्मतिमवमत्यैव ध्वस्तो मित्रवर्मा, स चेल्लब्धः पेशलम्' इत्यथ नालीजङ्घं रहस्यशिक्षयम्—'तात, आर्यमार्यकेतुमेकान्ते ब्रूहि 'को न्वेष मायापुरुषो य इमां राज्यलक्ष्मीमनुभवति, स चायमस्मद्बालो भुजङ्गेनामुना परिगृहीतः। किमुद्गीर्येत ग्रस्येत वा' इति। स यद्वदिष्यति तदस्मि बोध्यः' इति। सोऽन्यद्दैवं मामावेदयत्—'मुहुरुपास्य प्राभृतैः, प्रवर्त्य चित्राः कथाः, संवाह्य पाणिपादम्, अतिविश्रम्भदत्तक्षणं तमप्राक्षं त्वदुपदिष्टेन नयेन। सोऽप्येवमकथयत्—'भद्र, मैवं वादीः।

---

देशकालयोः। विपत्तेश्च प्रतीकारः सिद्धिः पञ्चाङ्गमुच्यते ॥' इति कामन्दकः। सिद्धिःप्रभावोऽर्थानां पुरुषाणां च समृद्धिः। 'स प्रभावः प्रतापश्च यत्तेजः' इत्यमरः। स्कन्धः शाखा। चतुर्गुणो य उत्साहः स एव विटपाः शाखाः द्विसप्ततिप्रकृतयः प्रजाः पत्राणि यस्येति सः। षड्गुणाः किसलयानि यस्येति सः। शक्तिसिद्धिपुष्पफलश्च। शक्तित्रयं पुष्पं सिद्धित्रयं च फलमिति 'षड्गुणाः शक्तयस्तिस्रः सिद्धयश्चोदयास्त्रयः' इति। नय एव वनस्पतिर्नीतितरुः। अनेकाधिकरणत्वादनेकप्रकारत्वात्। असहायेन सहायहीनेन। दुरुपजीव्यो दुःखेनोपजीवितुमशक्यः। यस्त्वयं नीतिवृत्तः। कोसलाभिजनत्वात् कोसलवंशत्वात्। 'संततिर्गोत्रजननकुलान्यभिजनान्वयौ' इत्यमरः। मन्त्रिगुणैः प्रधानगुणैः। अवमत्य अवगणय्य। स मन्त्री। चेद्यदीत्यर्थः। लब्धः प्राप्तः। न्विति वितर्के। पेशलं सुन्दरम्। तातेति। भुजङ्गेन सर्पेण। उद्गीर्येत। त्यजेतेत्यर्थः। ग्रस्येत वेति भक्षयिष्यति वा। उपास्य सेवित्वा। प्राभृतैरुपायनैः। प्रत्यग्रचित्तः नवीनचित्तः। संवाह्य। 'संवाहनं पुरस्कारः।' विस्रम्भो विश्वासः। भद्र कल्याणेति संबोधनम्। अभिजनस्य कुलस्य। प्रवा-

अभिजनस्य शुद्धिः, दर्शनम् असाधारणं, बुद्धिनैपुण्यम्, अतिमानुषं प्राणबलम्, अपरिमाणमौदार्यम् अत्याश्चर्यमस्त्रकौशलम्, अनल्पं शिल्पज्ञानम्, अनुग्रहार्द्रं चेतः तेजश्चाप्यविषह्यमभ्यमित्रीणाम्, इत्यस्मिन्नेव सन्निपातिनो गुणाः येऽन्यत्रैकैकशोऽपि दुर्लभाः। द्विषतामेष चिरबिल्वद्रुमः, प्रह्वानां तु चन्दनतरुः; तमुद्धृत्य नीतिज्ञमन्यमश्मकमिमं च राजपुत्रं पित्र्ये पदे प्रतिष्ठितमेव विद्धि। नात्र संशयः कार्यः’ इति। तच्चापि श्रुत्वा भूयोभूयश्चोपधाभिर्विशोध्य तं मे मतिसहायमकरवम्। तत्सखश्च सत्यशौचयुक्तानमात्यान्विविधजनांश्च गूढपुरुषानुदपादयम्। तेभ्यश्चोपलभ्य लुब्धसमृद्धमत्युत्सिक्तमविधेयप्रायं च प्रकृतिमण्डल-लुब्धतामभिख्यापयन्, धार्मिकत्वमुद्भावयन्, नास्तिकान्कदर्थयन्, कण्टकान्विशोधयन्, अमित्रोपधीरपघ्नन्, चातुर्वर्ण्यं च स्वधर्मकर्मसु स्थापयन्, अभिसमाहरेयमर्थान्-

---

धारणम्। महदित्यर्थः। अतिमानुषं मानुषमतिक्रम्य वर्तत इति। अपरिमाणं परिमाणरहितम्। औदार्यमुदारस्य भावस्तथा। अस्त्रकौशलमस्त्रकुशलता। शिल्पज्ञानम् रचनाज्ञानम्। अविषह्यं सोढुमशक्यम्। संनिपातिन एकत्रावस्थिताः। चिरबिल्वद्रुमो विषद्रुमः। प्रह्वानामनुरागवताम्। पित्र्यं पितुरिदम्। संशयः संदेहः। भूयोभूयो वारंवारम्। उपधाभिः। तत्सखः स एव सखेति तत्सखः। ‘राजाहःसखिभ्यष्टच्’ इति टच्। सत्यं सत्यप्रतिज्ञानम्। शौचं शुद्धिः गूढपुरुषान्गुप्तसेवकान्। कण्टकान्रिपून्। अलुब्धतां लुब्धत्वाभावम्। अभिख्यापयन्प्रकटीकुर्वन्। नास्तिकान्नास्तिक्ययुक्तान्। चातुर्वर्ण्यं चतुर्णां वर्णानां ब्राह्मणादीनां समाहारश्चातुर्वर्ण्यम्। अर्थमूला अर्थाधीनाः। दौर्बल्याद्दुर्बलस्य भावस्तथा। आकलय्य। मनसि कृत्वेत्यर्थः। योगान्विविधोपायान्। ‘योगो युक्तौ च संगत्यां कार्मणालभ्यलाभयोः। देहदार्ढ्ये प्रयोगे

र्थमूला हि दण्डविशिष्टकर्मारम्भा न चान्यदस्ति पापिष्ठं तत्र दौर्बल्यात्' इत्याकलय्य योगानन्वतिष्ठम्।

इति श्रीदण्डिनः कृतौ दशकुमारचरिते विश्रुतचरितं नामाष्टम उच्छ्वासः।



च विष्कम्भादौ तथात्मनि' ॥ उपाये भेषजे विद्भिर्द्रुमसंनहने धने विस्रब्धघातिनि ध्याने युक्तिन्याये च योजने ॥ इति महीपः ॥

इति श्रीसकलशास्त्रार्थसार्थकीकृतशेमुषीविलासरससान्द्रप्रवर्तितासंख्ययशः समुद्रविद्वत्परिपच्चन्द्रयतीन्द्रसर्वविद्यानिधान श्रीमत्कवीन्द्राचार्यसरस्वतीकृतायां दशकुमारव्याख्यायां पदचन्द्रिकाभिधायां विश्रुतचरितं नामाष्टम उच्छ्वासः ॥

इति शम्।

# DASAKUMARA CHARITA.

**Summary.**—When I was wandering in the forest of the Vindhya mountain, I saw a young boy evidently happily born but in extreme distress. He told me weeping that an old man who was his only support had fallen into a well there in trying to draw some water for him, and he had not strength enough to pull him up. By means of some creepers I pulled the man up and contrived to draw some water for the boy, and also appeased his hunger with some Lakucha fruits. We then sat under a tree, and I asked the old man who he was, who the boy was, and how they had come to that condition. Tears came to the eyes of the old man, and he gave me the following account of himself and of the boy:

"There was a king named PUNYAVARMAN who ruled over Vidarbha. He was a typical ruler in every respect, and was succeeded by one ANANTAVARMAN who seemed as brilliant as his predecessor. Though full of all qualities and skilled in all fine arts, he had paid no attention to the science of polity. VASURAKSHITA who was an old minister of the state realized how want of political knowledge on the part of the king would bring disaster on the kingdom and persuaded ANANTAVARMAN in secret to pay his attention to it. He agreed, but casually mentioned the idea to the ladies of the harem. VIHARABHADRA, who, though an accomplished courtier, was the vilest person imaginable, heard it, laughed in derision, and said: 'My liege, if there is one fortunate man on earth, others decry him for selfish means. If he is careful to value them at their worth, then they turn and excite his ambition. They say, "Study this, it will help you to become an emperor." Even a digest of political science is hard to grasp

without a knowledge of all other sciences, and verily one grows old before one has learnt it. Grant that he studies it, and what is the result? He has to toil night and day without rest or food, and, let alone Emperorship, he cannot even control his own immediate circle. People teach others several excellent things, and it is all nonsense, and the greatest sages who have given law and sciences to the world could not themselves act up to them. You are extremely fortunate in your birth, body, beauty, health, and so forth, you have plenty of men and money, and enjoy happiness in quiet.'

"So he said and prostrated himself in all humility. The king thought that he was his real well-wisher in every way and began to insult the old minister. The latter observed the change, felt the insult, foresaw that a feudatory, the ruler of Asmaka, a master of political craft, would depose the king and establish himself in his position and considering that the tie between the royal family and himself was one of several generations continued in his office hoping to do the king good in time to come at least.

"Some time went on in this way, and the son of the minister of VASANTABHANU, the ruler of Asmaka, arrived at the capital with a retinue of loose characters. He soon won VIHARABHADRA to his side, and through him won a place in the king's favour. When the king would think of a vice, he would extol it, and the king would blindly listen to him. There were drinking, libertinism, plunder, gambling, harshness, and so on every where, and while the income fell, the royal expenditure grew beyond all measure. The secret servants of the enemy began to destroy the king's troopers by various means, and the state came to the verge of ruin.

"At this stage the king violated the honour of a female dancer in the retinue of one of his feudatories and this gave a pretext to VASANTABHANU to combine several princes against him. The king soon became a

victim of the confederates, and VASANTABHANU rousing internal quarrels among the successful princes became the master of Vidarbha.

"The old minister tried to save the queen, her young daughter MANJUVADINI, and this young prince BHASKARAVARMAN, and while taking them out he died of fever. My friends conducted the fugitives to our late king's step-brother, MITRAVARMAN, who audaciously made improper proposals to the noble queen. She repulsed him with reproof, but soon coming to know his intentions of killing the young prince sent him with me to live somewhere taking care of his life. The boy followed me on foot, and as he was just now very thirsty I tried to draw some water for him from this well, and in the attempt fell into it. You have delivered me, and now be a protector to this prince who is helpless."

On inquiry I found that the boy's mother and my father were descended from the same maternal grandfather. I next managed to appease our hunger with some venison, and coming to know that the infamous MITRAVARMAN tried to deceive the boy's mother by regarding her daughter as his own and giving her in marriage to PRACHANDAVARMAN, and get the boy back through her, and slay him. I despatched NALIJANGHA, for that was the name of the old man, to go and proclaim that the young prince was killed by a tiger and carry my instructions to the queen to kill MITRAVARMAN, to encourage PRACHANDAVARMAN to snatch the kingdom of MITRAVARMAN, and marry her daughter and to declare in confidence to a few noble men that she dreamt a dream that her boy would come to life again and become king. My instructions were followed, and I managed to stab PRACHANDAVARMAN a well wisher of the ruler of Asmaka in the presence of all. Then by a stratagem I introduced the boy as favoured by Goddess, made him king in his step-uncle's place, and espoused his sister. I next found that the boy-king required assistance, stayed there for some time,

reorganizing the Government and replenishing the treasury, and waited for opportunity to destroy VASANTABHANU, and restore the boy-king to his ancestral throne.

---

Page 1.

This is the story of his own self narrated by **Vis'ruta.** It is therefore called *Vis'rutacharitam* or the Story of **Vis'ruta.**

1. Some editions begin this Uchchhvâsa with अथ, then. Padachandrikâ notes this word. अथ has also some benedictory sense and in this sense is most appropriate in the beginning of the story.

सः, he : Vis'ruta.

When अपि follows सः the process of सन्धि is as follows:

(1) The Visarga is really स् and it is replaced by रु (See Pānini VIII. ii. 66.)

(2) This रु is replaced by उ (See Pānini VI. 1. 113)).

(3) The अ in स and the succeeding उ are replaced by ओ (VI. i. 87);

(4) The initial अ in अपि is dropped and the form becomes सोऽपि (VI. 1. 109). The mark ऽ is put to show that there is an अ in disguise.

आचचक्षे-narrated.

देव, worthy sir; this is a form of address with a sense of reverence; *Cf.* राजा भट्टारको देवः—अमरः 1. 7.

मयाऽपि परिभ्रमता, by me too who was wandering; of course it is a matter of common notice that, in Sanskrit, passive constructions are more frequent than active ones.

परिभ्रमता, the root here is भ्रम् to wander.

The suffix परि means all round; hence परिभ्रम् means to wander here and there.

विन्ध्याटव्याम्, विन्ध्यायाः अटवी तस्याम्, षष्ठीतत्पुरुष compound.

An अटवी is a forest, and विन्ध्य is a well known mountain. Hence the word means, 'in the forest of the Vindhyas.'

2. कोऽपि some one. The force of this is to indicate that the person is one about whom nothing is known. It should be distinguished from कश्चित् which means 'a certain.'

कुमारः, a boy. कुमार is often used to mean a prince *e.g.*, कुमारो भीमसेनः. It is sometimes used to mean an heir apparent: *e.g.*, उपवेष्टुमर्हति कुमारः; कुमारस्य आयुषो बाणः (The arrow of Ayus, the heir-apparent). But in the present case as nothing is supposed to be known about the boy, it should simply be taken to mean a boy. He is however prince Bhanuvarman.

क्षुधा, with hunger (क्षुध्, *f*).

तृषा, with thrist (तृष् *f*).

क्लिश्यत्, distressed; troubled. The root is क्लिश् (4. A.) to be tormented.

अक्लेशार्हः=न+क्लेशार्हः, one who was unable to be tormented.

क्वचित् कूपाभ्याशे, on the brink of a certain well. कूपस्य+अभ्याशे। A कूप is a well, and अभ्याश close proximity. क्वचित्—though it means somewhere, and is an adverb, yet when it is thus employed, it acquires a pronominal force. The word thus means on the close proximity or brink of a certain well. It is referred to as क्वचित्, because the exact locality could not be fixed.

Other examples of adverbs acquiring a pronominal force are तत्रभवान्, अत्रदिने, etc.

3. अष्टवर्षदेशीयः, who was slightly less then eight years in age. The three terminations कल्प, देश्य, and देशीय occur in the sense of ईषदून, slightly less, (See Pânini V. iii. 67.) *The examples are* विद्वत्कल्पः, विद्वद्देश्यः, *and* विद्वद्देशीयः.

त्रासगद्गदं = त्रास + गद्गद, an Avyayibbâva compound, faultering with fear.

अगदत्, said, (The root is गद्, to say).

महाभाग—worthy sir; illustrious gentleman.

4. क्लिष्टस्य, to one who is in distress. Notice the genitive in the sense of dative.

क्रियतां, may (it) be done.

आर्य, noble sir: another word of address.

साहाय्यकम्—सहायस्य भावः; assistance; help.

अस्य मे—to me whom you see. अस्य is used in drawing attention to.

5. प्राणापहारिणीं—प्राणान् अपहरन्तीति ताम्—that which is on the point of depriving me of my life; killing.

पिपासा—thirst. पातुम् + इच्छा.

प्रतिकर्तुम् (दूरीकर्तुम्)—to remove. प्रति + कृ; literally, प्रति against, and कृ, to do.

उदकम् (जलम्)—water.

उदञ्चन् (निष्कासयन्)—trying to draw up water (from a well). उद् + अञ्च् (ए); उद् means up; and अंच् is used in the sense of motion.

इहकूपे (अस्मिन् जलाशये), in this well. Notice how the adverb इह has the force of a demonstrative pronoun.

6. निष्कलः (वृद्धः, स्थविरः), an old man, literally निर्गता

कला यस्मात् सः one from whom the bodily vigour had fled. His name is नालीजङ्घः

ममैकशरणभूतः, who was the only support to me.

पतितः, has fallen. (Root पत्, to fall).

अलम् (पर्याप्तम्), able enough.

7. उद्धर्तुम्. to lift up. (उद्+हृ)

The prose order is अहं तम् उद्धर्तुम् अलं न अस्मि.

इति—shows the end of the boy's speech.

अथ—then ; thereupon.

अभ्येत्य—having gone near. अभि+इ, where अभि means towards, and इ to go.

मतल्या (वल्या), with a creeper (वल्ली f.)

कयाऽपि goes with मतल्या and means some creeper.

उत्तार्य, having lifted up. Literally उत् up, तृ to cross.

8. वंशनाली (वंशनालिका, वेणुदण्डः), a pipe made of bamboo.

अद्भिः (जलैः) with water. अप् is feminine and is always in the plural.

पञ्चषैः (पञ्च, षड्वा) five or six. Some editions read चतुःपञ्चषैः four, five or six. It is a Bahuvrihi compound, the termination डच् occurring at the end of the compound.

9. शरक्षेपोच्छ्रितस्य (शरस्य क्षेपः; तस्मात् [अपि] उच्छ्रितः) —बाणगमनादप्युच्चस्य—) which was taller than the reaching of an arrow. That is to say, the tree was so tall that an arrow discharged from a bow could hardly reach the top of it.

लकुचवृक्षस्य, of a Lakucha tree. Lakucha is a kind of bread-fruit tree and is also called लिकुच or डहु in Sanskrit. It is known as वडहर in the vernacular.

शिखरात् from the top of it.

पाषाणपातितैः (पाषाण+पातित), made to drop down by (throwing) stones at. The idea is he threw some stones at some of the fruits at the top of that tree till five or six fruits dropped down.

10. प्रत्यानीतप्राणवृत्तिम् (प्रत्यानीता प्राणवृत्तिः यस्य सः), one brought back to the condition of normal life. The idea is that the boy was almost dying from hunger and thirst, and he was saved from actual death by eating those fruits and drinking that water.

आपाद्य having made. (आ, पद्, णिच्, ल्यप्)

निषण्णः (*pp.*) seated or reclining. The root is निषद् (1st conjugation, Parasmaipada; to sit down; to lie; to recline.

जरन्तम् (वृद्धम्) old man. (Accusative singular). The root is जॄ to grow old, and the termination is अतृन्.

अब्रवम् spoke. The root is ब्रू (2nd conjugation—Ubhayapada). This takes two accusatives one of which points out the person to whom something is said and the other what is said. Also this root is defective in the non-conjugational tenses its forms being made up from वच्, to speak.

*N. B.*—The two objects of the predicate here are (1) जरन्तम् and (2) the speech which begins as तात etc.

11. तात sir. तात generally means father. It is sometimes used, (1) as a term of affection, endearment, or pity, applied to any person, but usually to inferiors or juniors, pupils, children, etc.; *e.g.* नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति (Srikrishna to Arjuna), (2) and as a term of respect applied to elders or other venerable personages.

*N. B*—In the present case however it is suited either way. But भगवान् etc. that occur further on show that the speaker has some reverence to the age of the person to whom he is speaking.

He asks three questions, (1), who is this boy? (2) who are you yourself? and (3) how did this calamity befall?

वा here may also be taken to mean एव, in which case it gives a reflexive sense, or it may be taken in its usual way of course.

आपद् distress; calamity.

आपन्ना occurred; befell. Notice the root in both of the above cases is the same.

Page 2.

1. सः he; that old man.

अश्रुगद्गदम्, tears choking his voice.

भूयतां the third person is used by way of showing respect.

2. जनपदः (देशः) country; kingdom.

तस्मिन् therein; in that kingdom.

भोजवंशभूषणम् (भोजस्य वंशः; तस्य भूषणम्) an ornament to the line of (the king) Bhoja.

अंशावतारः (अंशेन अवतारः), an incarnation of a portion (of Dharma). The idea is that he who is being described was so much given to the performance of duty ('Dharma') that it seemed he was an incarnation itself of a portion of Dharma.

3. अतिसत्त्वः (अति *i. e.*, अत्यन्तं सत्त्वं यस्य) one who was extremely powerful. सत्त्वं (बलम्) is strength or force; also Sattva quality.

सत्यवादी (सत्यं वदतीति), one who habitually spoke the truth.

वदान्यः (बहुप्रदः) one who was liberal or munificent; a bountiful person.

*N. B.*—It is happy that the same consonants which occur in a previous word occur in the word that follows; *e. g.*......वादी वदान्यः;...विनीतो विनेता.

विनीतः (नम्रः), one of an extremely modest behaviour. (विनीतः विनयेन युक्तः)

*N. B.*—विनीत is also explained as प्रावीण्यं नीतः that is, educated to a high degree of proficiency; *e.g.* विनीतस्त्वथ वार्तायां त्रय्यां चैव नराधिपः when विनीतः is explained as तत्तदभिज्ञैः प्रावीण्यं नीतः Hence सुविनीत means one who is extremely well educated.

Notice, these are kingly qualities. It is declared that a king should be.

विनीतः सत्त्वसंपन्नः कुलीनः सत्यवाक्शुचिः ।

(Yâjnavalkya I. 309).

विनेता (शिक्षाकर्ता), one who would curb down those who swerve from the path of duty and bring them back to their proper condition. प्रजानां विनेता is the order of words.

स्वधर्माच्चलितान्राजा विनीय स्थापयेत्पथि ।

"Having punished those who swerve from their rightful (path of) duty, the king should make them settle in their (proper) way."

(Yâjnavalkya I. 361).

4. रञ्जितभृत्यः (रञ्जिताः भृत्याः येन) one who satisfied the dependents or servants.

*N. B.*—भृत्य has two senses, a dependent, and a servant.

उदग्रः (उन्नतः) one of a lofty bearing or demeanour.

मूर्तिबुद्धिभ्यां (Dvandva compound) both in body and in intellect. मूर्तिः (कायः) is body and बुद्धिः (मतिः) intellect.

5. उत्थानशीलः (पौरुषस्वभावः) who was habitually prone *to be valorous. That is to say, his body and intellect* were both fitted to make him highly valorous.

A king is described to be.

......धार्मिकोऽव्यसनश्चैव प्राज्ञः शूरो रहस्यवित्

(Yâjnavalkya I. 310).

"(He must be) dutiful, not given to evil pursuits, learned, valorous, and knowing of the secrets."

शास्त्रप्रमाणः (शास्त्रमेव प्रमाणं यस्य) who looked to the sacred ordinances ('S'âstras') for authority. The idea is, he had as his guide the S'âstras, and whatever is contained in them he respected as the anthority and followed it. *Cf.*

तस्मात् शास्त्रं प्रमाणं ते कार्याकार्ये व्यवस्थितौ ।

"Therefore let S'âstra be your authority in deciding what should be done and what should not be done."—Bhagavad-Gita.

*N. B.*—Advanced students may however note here that in India no human agency was recognised in the matter of legislation or framing rules for the conduct of man. All the rules that were expected to be followed by mankind at large were embodied in what are called Sacred ordinances or S'âstras, and one had to follow them on pain of punishment. Hence the above epithet.

शक्यभव्यकल्पारम्भो। शक्यश्च भव्यश्च कल्पश्च शक्यभव्यकल्पः शक्य...कल्पश्चासौ आरम्भश्च, शक्य...म्भः शक्य...म्भः अस्य 'अस्ति' इति) One who would undertake such acts as can be easily *accomplished, as are liked by the people, and as are* enduring. शक्य literary means possible, and hence it is an act which can be easily accomplished; भव्य is what is

liked by the people; and कल्प is that which suffers no deterioration and hence enduring. The same is interpreted otherwise: शक्य is what can be accomplished by one's own self; भव्य is what is auspicious; and कल्प is what is allowed by law.

The various meanings of कल्प may be noted: कल्प = what is allowed by law; a sacred precept; S'âstra; a period of time (*e.g.* श्वेत वराह कल्प); Kalpa-Vriksha (celestial plant yielding whatever is desired); and an alteration.

संभावयिता, one who could extend संभावना in the form of honour and wealth (सम्यक् भावयिता).

6. बुधान्, learned people.

[Another meaning of बुध is the planet mercury].

In ancient India, the rulers were, as a rule, patrons of learning. They would always extend honour and wealth to the learned.

*N. B.*—Notice how the various prefixes prefixed to the root भू alter the meaning of it.

प्रभावयिता (प्रकर्षेण भावयिता) promoting one's interests well.

सेवकान्, servants (in general).

उद्भावयिता, one who would elevate.

बन्धून्, relations. There are three kinds of relations,—(1) those that are related to one through his father; (2) those that are related to one through his mother; (3) and those that are related to one's own self by marriage, etc.

न्यग्भावयिता, one who would subdue.

*N. B*—These various epithets show how one should behave himself towards others.

7. असंबद्धप्रलापेषु, in vain incoherent talks, असंबद्ध (परस्परामिलित) is, not connected with each other, and प्रलाप (अनर्थकं वचः) is vain talk. सम्यक् बद्धः = संबद्धः ; न संबद्धः = असंबद्धः असंबद्धाश्च ते प्रलापाश्च, असंबद्धप्रलापाः—तेषु.

अदत्तकर्णः (अश्रोता) one who would not hear. दत्तः कर्णः येन सः ; न दत्तकर्णः ; = अदत्तकर्णः

कदाचिदपि, at any time whatsoever.

अवितृष्णः (विगता तृष्णा यस्य सः वितृष्णः; न वितृष्णः = अवितृष्णः) one whose desire never subsided.

The idea is he was never tired of cherishing a desire to good qualities.

8. अतिनदीष्णः (अत्यन्तं नदीष्णः) extremely proficient. (नदीष्णः = निपुणः).

The derivation of this word is important. The root is स्ना to bathe (2nd conj.) The rule is that if a root ends in आ and has no suffix, then, when another word comes before in order to enter into a componnd with it, the termination क, (ultimately अ), comes in the passive sense, the final आ of the root being dropped. (See Panini III. ii. 3). The next rule is that when the root स्ना is preceded by the suffix नि or the word नदी, स् of the root is replaced by ष् when the resultant meaning is expertness (See Panini VIII. iii. 89). Thus नदीष्णः literally means one who is an expert in bathing in a river. Hence, is supposed to know the dangerous spots in rivers, their depth, course, etc., and thus the sense of expertness, कलासु, in the arts.

Arts are recognized to be sixty-four. A कला or art differs from विद्या, that is, learning, inasmuch as the for-

mer requires but an individual knack and the latter instruction from a teacher.

नेदिष्ठः (superlative of अन्तिक, near) so it means अन्तिकतमं, one who is closest.

धर्मार्थसंहितासु, in the sciences relating to धर्म (Dharmasastras) and in the sciences relating to अर्थ (Arthasastras, that is, works on polity).

*N. B.*—A king must be an expert both in the Dharmasastras and in the Arthasastras, the former for the guidance in sacred duties and the latter for political necessities.

9. सुकृते, good deed done towards him.

सुतरां, more abundantly.

प्रत्युपकर्ता, one who would return the kindness done to him.

प्रत्यवेक्षिता, one who would take good care of.

कोशवाहनयोः, of the treasury (कोशः=भाण्डागारः) and the beasts of burden (वाहनं=अश्वादि)

It is one of the daily duties of the king to take good care of his treasury and army. This fact and several other things forming the daily task of the king will become apparent from the sarcastic speech of Viharabhadra that will soon follow.

**Page 8.**

1. यत्नेन with all efforts.

सर्वाध्यक्षाणां, of all persons who had independent offices. Here is an injunction to the king.

ये राष्ट्राधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम्।
साधून् संमानयेद्राजा विपरीतांश्च घातयेत्
उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत्।

"Whoever are appointed (to the offices) of the realm,

